१८७ लुञ्च अपनयने। लुच्यात्। १८८ अञ्चु गतिपूजनयोः। अच्यात्। गतौ नलोपः। पूजायां तु अञ्च्यात्। १८९ वञ्चु १९० चञ्चु १९१ तञ्चु १९२ त्वञ्चु १९३ म्रुञ्चु १९४ म्लुञ्चु १९५ म्रुचु १९६ म्लुचु गत्यर्थाः। वच्यात्। चच्यात्। तच्यात्। त्वच्यात्। अम्रुञ्चीत्। अम्लुञ्चीत्। २२६१ जॄस्तम्भुम्रुचुम्लुचुग्रुचुग्लुचुग्लुञ्चुश्विभ्यश्च ३।१।५८॥ एभ्यश्च्लेरङ् वा स्यात्। अम्रुचत्—अम्रोचीत्। अम्लुचत्—अम्लोचीत्। १९७ ग्रुचु १९८ ग्लुचु १९९ कुजु २०० खुजु स्तेयकरणे। जुग्रोच। अग्रुचत्—अग्रोचीत्। जुग्लोच। अग्लुचत् अग्लोचीत्। अकोजीत्। अखोजीत्। २०१ ग्लुञ्चु २०२ षस्ज गतौ। लुङि अङ् वा। अग्लुचत् अग्लुञ्चीत्। सस्य श्चुत्वेन शः, तस्य जश्त्वेन जः। सज्जति। अयमात्मनेपद्यपि। सज्जते। २०३ गुजि अव्यक्ते शब्दे। गुञ्जति। गुञ्ज्यात्। २०४ अर्च

---

च क्त्वायामाशीर्लिङि नलोपो न भवति। कुञ्चधातुस्तु स्वाभाविकञकारोपध एव। न त्वनुस्वारपरसवर्णजन्यञकारोपध इति 'परेषु धातुषु' इति सूत्रे भाष्यकैयटयोः स्थितम्। अतस्तस्याशीर्लिङि 'अनिदितामिति' नलोपस्य न प्रसक्तिरित्यभिप्रेत्योदाहरति—कुञ्च्यादिति। ञकाररहितपाठस्तु प्रामादिक इति शब्देन्दुशेखरे स्थितम्। लुञ्चेति। अपनयनं लोपः। अनुस्वारपरसवर्णजन्यस्य ञकारस्य निर्देशः। तथा च आशीर्लिङि अनिदितामिति नलोपः। तदाह—लुच्यादिति। एवमञ्चुधातोरपि द्रष्टव्यम्। पूजायां त्विति। 'नाञ्चेः पूजायाम्' इति निषेधादिति भावः।

वञ्चु चञ्चु तञ्चु इति आद्याः पञ्च चोपधाः। अनुस्वारपरसवर्णाभ्यां ञकारनिर्देशः। तथा च तेषामाशीर्लिङि अनिदितामिति नलोपः, तदाह—वच्यादिति। लुङि अम्रुञ्चीदिति नोपधो रूपम्। सिज्लोपः। जॄस्तम्भु। 'च्ले सिच्' इत्यतः च्लेरिति, 'अस्यतिवक्तिख्यातिभ्यः' इत्यतः अङिति, 'इरितो वा' इत्यतो वेति चानुवर्तते। तदाह—एभ्यश्च्लेरङ् वेति। जॄष् वयोहानौ, स्तम्भु सौत्रो धातुः, म्रुचुम्लुचू गत्यर्थौ ग्रुचु ग्लुचु स्तेयकरणे ग्लुञ्चु गतौ, श्वयतेश्च इत्यर्थः। अम्रुचदिति। ङित्त्वान्न लघूपधगुणः। अम्रोचीदिति। अङभावे इट ईटि इति सिज्लोपः। ग्रुचु ग्लुचु इति। 'जॄस्तम्भु' इति अङ् वेत्याह—अग्रुचत् अग्रोचीदिति। आद्यस्य रूपम्। अथ द्वितीयस्य अङ्विकल्पमुदाहरति—अग्लुचत् अग्लोचीदिति। अङि सति ङित्त्वान्न लघूपधगुणः। अङभावे सिज्लोपः। ग्लुञ्चु षस्जेति। आद्यो नोपधः, द्वितीयस्तु चोपदेशः, [illegible] इत्त्वात्। तत्र आद्यस्य लुङि विशेषमाह—लुङीति। 'जॄस्तम्भ्वित्यत्र नेति शेषः। ग्रुचुग्लुञ्च्वोः पृथग्ग्रहणसामर्थ्यात् नलोपो नेति वृत्तिकृत्। अग्लुञ्चत्। सस्येति धात्वादेः षः सः इति स्थितस्य द्वितीयस्य सकारस्य श्चुत्वेन शकार इत्यर्थः। तस्येति। शकारस्य झलां जश् झशि इति जकार इत्यर्थः। गुञ्जेति। इदित्त्वादाशीर्लिङि नलोपो नेत्याह—गुञ्ज्यादिति। अर्चेति। [illegible] 'वल्गा [illegible]

२२९५ उपदेशेऽत्वतः ७।२।६२॥ उपदेशेऽकारवतस्तासौ नित्यानिटः परस्य थल इण्न स्यात् । २२९६ ऋतो भारद्वाजस्य ७।२।६३॥ तासौ नित्यानिट ऋदन्तादेव थलो नेट् भारद्वाजस्य मतेन । तेनान्यस्य स्यादेव । अयमत्र संग्रहः—

अजन्तोऽकारवान्वा यस्तास्यनिट् थलि वेडयम् ।
ऋदन्त ईदृङ् नित्यानिट् क्राद्यन्यो लिटि सेड् भवेत् ॥

---

स्य थल इण्निषेधार्थं तास्वदित्यावश्यकम् । तेन 'लिट्यन्यतरस्याम्' इत्यदो घस्लृभावे जघसिथेत्यत्र न निषेधः, घस्लृस्तासावभावादिति अद् भक्षणे इति धातौ मूल एव वक्ष्यते । 'घसस्तासावस्ति अनिट् चे'ति भाष्यम् । एवं वेञो वयादेशेऽपि न निषेध इति बोध्यम् । उपदेशेऽत्वतः । 'अत्वतः' इति छेदः । अत् ह्रस्वाकारः सः अस्य अस्तीति अत्वान् 'तसौ मत्वर्थे' इति भत्वान्न जश्त्वम् । थल इति वर्तते । पूर्वसूत्रं, तत्र यदनुवृत्तं तदप्यनुवर्तते । तदाह—उपदेशे अकारवत इति । शक्लृ शशकिथ, यच् पपक्थेत्युदाहरणम् । अत्र क्रादिनियमप्राप्त इण्न भवति । उपदेशे किम् । कृष विलेखने । चकर्षिथ । अत्वत इति किम् । विभेदिथ । तपरः किम् । रराधिथ । तासौ किम् । जग्रहिथ । 'जिघृक्षती'त्यत्र 'सनि ग्रहगुहोश्चे'ति सनि नित्यमनिट्, न तु तासौ । नित्येति किम् । अञ्ज, आनञ्जिथ । 'ऊदित्वात्तासौ वे'डिति भाष्यम् । चकमिषेत्यप्युदाहरणम् 'स्नुक्रमो'रिति नियमेनात्मनेपदे तासावनिट्त्वेऽपि परस्मैपदे सेट्कत्वात् । ऋतो भारद्वाजस्य । तासौ नित्यमनिट् इति, थलीति, नेति, इडिति चानुवर्तते । भारद्वाजस्य मते ऋदन्ताद्धातोः परस्य नेडिति फलितम् । कृञादौ 'अचस्तास्व'दित्येव सिद्धम् । अतो नियमार्थमिदमित्याह—ऋदन्तादेव थलो नेडिति । अनृदन्तात्परस्य तु थल इट् स्यादेवेत्येवकारार्थः । तदाह—अन्यस्य स्यादेवेति । ऋदन्तभिन्नात्परस्य थल इट् स्यादेवेत्यर्थः । तथाच ऋदन्तभिन्नाद्धातोः परस्य थलो नेति न्निवृत्तिरिति भारद्वाजमते फलतीति न वैयर्थ्यमिति भावः । तथाच अनृदन्ताद्धातोः परस्य थलो भारद्वाजमते इट् । मतान्तरे तु 'अचस्तास्व'दिति 'उपदेशेऽत्वत' इति च तत्र नेडिति विकल्पः फलतीति भावः । तथा—पपिथ—पपाथ । पेचिथ—पपक्थ । अयमत्रेति । 'कृसृभृवृस्तुद्रुस्रुश्रुवो लिटी'ति 'अचस्तास्वत्थल्यनिटो नित्य'मिति 'उपदेशेऽत्वत' इति 'ऋतो भारद्वाजस्ये'ति च सूत्रचतुष्टयस्य विषयाणां संग्रहो वक्ष्यत इत्यर्थः । अजन्त इति । यः धातुः ऋदन्तभिन्नाजन्तः ह्रस्वाकारवान् वा तासौ नित्याऽनिट् सोऽयं थलि विकल्पितेट्क इति पूर्वार्धस्यार्थः । अत्र 'ईदृग्'इत्यस्य तासौ नित्याऽनिडित्यर्थः । यः ऋदन्तस्तासौ नित्यानिट् सः थलि नित्याऽनिडित्यर्थः । 'अचस्तास्व'दिति प्राप्तिनिमित्ते 'ऋतो भारद्वाजस्ये'ति भारद्वाजमतेऽपि तस्य अनिट्कत्वादिति भावः । क्राद्यन्य इति । क्रादिष्टभ्योऽन्यो धातुः लिटि नित्यं सेडित्यर्थः । क्रादिष्टस्य एव थलस्य लिटि नेडिति कृसृभृ इति सूत्रेण नियमितत्वादिति भावः । नन्वत्र क्राद्यन्य इत्युक्त्या क्रादीनामष्टानां लिटि नित्यानिट्कत्वमवगतम् । तदनुपपन्नम्, स्तुद्रुस्रुश्रुवाम् ऋदन्तभिन्नत्वेन

न च स्तुद्रुस्रुश्रुवादीनामपि थलि विकल्पः शङ्क्यः। 'अचस्तास्वत्-' (सू २२९४) इति 'उपदेशेऽत्वतः' (सू २२९५) इति च योगद्वयप्रापितस्यैव हि प्रतिषेधस्य भारद्वाजनियमो निवर्तकः 'अनन्तरस्य'-इति न्यायात्। विवयिथ। विवेथ। आजिथ। विव्यथुः। विव्य। विवाय। विवय। विव्यिव। विव्यिम। वेता। अजिता। वेष्यति। अजिष्यति। अजतु। आजत्। अजेत्। वीयात्। २२९७ **सिचि वृद्धिः परस्मैपदेषु** ७।२।१॥ इगन्ताङ्गस्य वृद्धिः स्यात्परस्मैपदे परे सिचि। अवैषीत्-आजीत्। अवेष्यत्। आजिष्यत्। २३१ तेज पालने। तेजति। २३२ खज

---

तेभ्यस्थलि 'अचस्तास्वत्' इति निषेधस्य भारद्वाजमते अप्रवृत्त्या इड्विकल्पस्य दुर्वारत्वात्। तथैव सति 'कृसृभृवृ' इति सूत्रे स्तुद्रुस्रुश्रुग्रहणमनर्थकमिति वाच्यम्। स्तुद्रुस्रुश्रुवां क्रादिनियमप्राप्तस्य इटो नित्यतया थल्यविशेषात्वादित्याशङ्क्य निराकरोति—न च स्तुद्रुस्रुश्रुवामपि थलि विकल्पः शङ्क्य इति। कुत इत्यत आह—अचस्तास्वदिति। अनन्तरस्यैव परस्य थल इण्निषेधः अनन्तरस्य तु थल इण्निषेधो नेति भारद्वाजीयं मतम्। अयं च इण्निषेधस्य निषेध 'अचस्तास्वदि'ति 'उपदेशेऽत्वत' इति च सूत्रद्वयप्राप्तस्यैव इण्निषेधस्य थले निवर्तकः। न तु क्रादिसूत्रप्राप्तस्य इट्प्रतिषेधस्यापीत्यर्थः। कुत इत्यत आह—अनन्तरस्येति। 'अचस्तास्व'दिति 'उपदेशेऽत्वत' इति 'ऋतो भारद्वाजस्ये'ति च सूत्रक्रमः। 'कृसृभृवृ' इति सूत्रं तु ततः प्राग्व्यवहितमिति भावः। किंच 'नेड्वशिकृति'त्यादिप्रतिषेधकाण्डोत्तरम् 'आर्धधातुकस्येड्वलादे'रिति विधिकाण्डारम्भसामर्थ्यादपि स्तुद्रुस्रुश्रुवामिण्निषेधो भारद्वाजनियमं बाधत इति 'नेड्वशि कृति' इत्यत्र 'वस्वेकाजाद्घसा'मित्यत्र च भाष्ये स्पष्टम्।

ततश्च प्रकृते अजेर्थलि वीभावे तस्य अजन्तत्वात्तासौ नित्याऽनिट्कत्वाच्च इड्विकल्प इति सिद्धम्। तदाह—विवयिथ विवेथेति। सिवादेशस्य थल पित्वात् अ संयोगादिति कित्त्वाभावाद्गुणः। इट्पक्षे अयादेशः। आजिथेति। 'वलादावार्धधातुके वेष्यते' इति वीभावाऽभावपक्षे अजधातोरुदात्तोपदेशत्वादिड्भूतत्वादिट्। द्विर्वचनम्। हलादिशेषः। 'अत आदे'रिति दीर्घः। विव्यथुरिति। अथुसि वीभावे द्वित्वे अभ्यासहस्वे असंयोगादिति कित्त्वात् गुणाभावे इयङपवादे 'एरनेकाच' इति यणि रूपम्। विव्येति। यस्य अकारे वीभावादि। विवाय विवयेति। 'णलुत्तमो वे'ति णित्त्वविकल्पाद्वृद्धिविकल्पः। विव्यिव विव्यिमेति। 'क्रादिनियमादिट्' अथेदि'ति नित्यमिट् यण्। वेता अजितेति। लुटि तासि वीभावविकल्पः। वेष्यति अजिष्यतीति लृटि स्ये वीभावविकल्पः। वीयादिति। आशीर्लिङादेशस्य आर्धधातुकत्वात् वीभावः। अथ लुङि सिचि वीभावे सार्वधातुकार्धधातुकयो'रिति गुणे प्राप्ते। सिचि वृद्धि। इगन्तस्येति। वृद्धिरुक्त्या इक इत्युपस्थितमङ्गस्येत्यधिकृतस्य विशेषणम्, तदन्तविधिरिति भावः। एवं च अकोषीदित्यादौ व्यञ्जनस्य न वृद्धिः। अवैषीदिति। लुङस्तिप्। इकारलोपः। सिचि वीभावः। एकाच इति इण्निषेधः। वृद्धिः। अडागमः। षत्वम्। आजीदिति। सिज्लोपः। 'वदव्रजे'ति हलन्तलक्ष-

मन्ये । खजति । २३३ खजि गतिवैकल्ये । खञ्जति । २३४ एजृ कम्पने । एजा- ञ्चकार । २३५ टु ओ स्फूर्जा वज्रनिर्घोषे । स्फूर्जति । पुस्फूर्ज । २३६ क्षि क्षये । अकर्मकः । अन्तर्भावितण्यर्थस्तु सकर्मकः । क्षयति । चिक्षाय । चिक्षियतुः । चि- क्षियुः । चिक्षयिथ-चिक्षेथ । चिक्षियिव । चिक्षियिम । क्षेता । २२९ अकृत्सा- र्वधातुकयोर्दीर्घः ७।४।२५॥ अजन्तस्याङ्गस्य दीर्घः स्याद्यादौ प्रत्यये परे । न तु कृत्सार्वधातुकयोः । क्षीयात् । अक्षैषीत् । २३७ क्षीज अव्यक्ते शब्दे । कूजिना सहायं पठितुं युक्तः । चिक्षीज । २३८ लज २३९ लजि भर्त्सने । २४० लाज २४१ लाजि भर्जने च । २४२ जज २४३ जजि युद्धे । २४४ तुज हिंसायाम् । तोजति । तुतोज । २४५ तुजि पालने । २४६ गज २४७ गजि २४८ गृज २४९ गृजि २५० मुज २५१ मुजि शब्दार्थाः । गज मदने च । २५२ वज २५३ व्रज

णायां वृद्धौ 'नेटि' इति निषिद्धायामाडागमे 'आटश्चे'ति वृद्धिः । तद्धि अवेजयत् आजि- खयत् । तेन पालन इत्यादि । स्पष्टम् । एजृ कम्पन इति । दीप्तौ त्वात्मनेपदी गतः । टु ओ- स्फूर्जेति । 'आदिर्ञिटुडवः' इति टुरित् । उपदेशेऽनुनासिकत्वादोकार आकारश्च इत् । 'ट्वितोऽथुच्' इत्यथुच्, 'आदितश्चे'ति निष्ठानत्वम्, 'ओदितश्चे'ति निष्ठायामिण्निषे- धश्च तत्फलानि । 'उपधायां चे'ति दीर्घस्यानित्यत्वज्ञापनार्थमिह दीर्घ ऊकारः पठितः । तेन कुर्दतीत्यादौ न दीर्घ इत्याहुः । स्फूर्जतीति । किति पुस्फूर्जे, अस्फूर्जीत् । क्षि क्षय इति । क्षयो नाशः । अन्तर्भावितण्यर्थ इति । नाशनार्थक इत्यर्थः । अकर्मकत्वेऽप्येवमेव पाठो युक्तः । क्षयतीति । नश्यतीत्यर्थः, नाशयतीति वा । शपि गुणे अयादेशः । चिक्षायेति । णलि वृद्धिः आयादेशः । चिक्षियतुरिति । 'असंयोगा'दिति कित्त्वान्न गुणः । इयङ् । चिक्षयिथ—चिक्षेथेति । पित्त्वेन कित्त्वाऽभावात् गुणः । अजन्तत्वात्थलि नित्यानिट्त्वे प्राप्ते भारद्वाजनियमात्थलि वेट् । इट्पक्षे अयादेशः । चिक्षियथुः । चिक्षिय । चिक्षाय । चिक्षय । वस्मसोस्तु क्रादिनियमात् नित्यमिट् । तदाह—चिक्षियिव चिक्षियिमेति । क्षेता । क्षेष्यति । क्षयतु । अक्षयत् । क्षयेत् । आशीर्लिङि विशेषमाह—अकृत्सार्व- धातुकयोः । अङ्गस्येत्यधिकृतम् । 'अयङ् यि क्ङिती'त्यतः यीति सप्तम्यन्तम- नुवृत्तमङ्गाक्षिप्तप्रत्ययविशेषणम्, तदादिविधिः । दीर्घश्रुत्या 'अचः' इत्युपस्थितमङ्गवि- शेषणम् । तदन्तविधिः । तदाह—अजन्तस्येत्यादिना । अकृत्सार्वधातुकयोरिति किम् । प्रकृत्य । गुणं बाधित्वा परत्वाद्दीर्घो न । चिनुयात्, सार्वधातुकत्वान्न दीर्घः । चोजेति । ईदुपधः । कूजिनेति । 'कूज अव्यक्ते शब्दे' इत्यनुपदमेव पठितम् । तत्रैव 'क्षीज अव्यक्ते शब्दे' इति पठितुं युक्तमित्यर्थः, अर्थैक्यादिति भावः । लज लजि भर्त्सन इति । 'भर्त्सनं त्वपकारगीः' इत्यमरः । द्वितीय इदित् । आशीर्लिङि लज्यात् । लञ्ज्यात् । लाज लाजि भर्जन इति । आदुपधौ । द्वितीय इदित् । जज जजीत्यादि । स्पष्टम् । वज व्र- जेति । आदस्य असंयुक्तहल्मध्यस्थाऽकारवत्त्वेऽपि 'न शसददवादिगुणानाम्' इत्येत्वा-

गतौ। ववजतुः 'वदव्रज'—(सू २२६७) इति वृद्धिः। अवाजीत्।

अथ टवर्गीयान्ता याडन्ता अनुदात्तेतः षट्त्रिंशत्। २५४ अट्ट अतिक्रमहिंसयोः। दोपधोऽयम्। तोपध इत्यन्ये। अट्टते। आनट्टे। २५५ वेष्ट वेष्टने। विवेष्टे। २५६ चेष्ट चेष्टायाम्। अचेष्टिष्ट। २५७ गोष्ट २५८ लोष्ट संघाते। जुगोष्टे। लुलोष्टे। २५९ घट्ट चलने। जघट्टे। २६० स्फुट विकसने। स्फोटते। पुस्फुटे। २६१ अठि गतौ। अण्ठते। आनण्ठे। २६२ वठि एकचर्यायाम्। ववण्ठे। २६३ मठि २६४ कठि शोके। शोक इह आध्यानम्। मण्ठते। कण्ठते। २६५ मुठि पालने। मुण्ठते। २६६ हेठ विबाधायाम्। विबाधा शाठ्यम्। जिहेठे। २६७ एठ च। एठाञ्चक्रे। २६८ हिडि गत्यनादरयोः। हिण्डते। जिहिण्डे। २६९ हुडि संघाते। जुहुण्डे। २७० कुडि दाहे। चुकुण्डे। २७१ वडि विभाजने। २७२ मडि च। ववण्डे। २७३ भडि परिभाषणे। परिहासः सनिन्दोपालम्भश्च परिभाषणम्। बभण्डे। २७४ पिडि संघाते। पिपिण्डे। २७५ मुडि मार्जने। मार्जनं शुद्धिर्न्यग्भावश्च। मुमुण्डे। २७६ तुडि तोडने। तोडनं दारणं हिंसनं च। तुतुण्डे। २७७ हुडि वरणे। वरणं स्वीकारः। हरण इत्येके। जुहुण्डे। २७८

---

भ्यासलोपौ नेत्याह—ववजतुरिति। अवाजीत्-अवजीत्। द्वितीयस्य तु संयुक्तहल्मध्यस्थाऽकारत्वाद् ऐत्वाऽभ्यासलोपयोर्न प्रसक्तिः। 'अवाजी' दित्यत्र 'अतो हलादेः' इति वृद्धिविकल्पमाशङ्क्याह—वदव्रजेति वृद्धिरिति। हलन्तत्वादेव सिद्धे व्रजग्रहणस्य 'अतो हलादेः' इति विकल्पनिरासार्थत्वादिति भावः। शुचादयो द्विसप्ततिर्वृत्ताः।

याडन्ता इति। 'शाड् श्लाघायाम्' इत्यन्ता इत्यर्थः। शाडन्ता इति क्वचित्पाठः। अट्टेति। तवर्गतृतीयोपधोऽयम्। चर्त्वष्टुत्वाभ्यां टोपधनिर्देशः। तदाह—दोपधोऽयमिति। तथा च अड्डधातोः सनि इटि अड्डि स इति स्थिते ष्टुत्वचर्त्वयोरसिद्धत्वाद् अजादेर्द्वितीयस्येति प्रवर्तमानं द्वित्वम् 'नन्द्राः संयोगादयः' इति दकारं विहाय डिस् इत्यस्य भवति। ततो हलादिशेषे दकारस्य ष्टुत्वचर्त्वयोः 'अट्टिटिषते' इतीष्टं सिध्यति। स्वाभाविकमूर्धन्योपधत्वे 'नन्द्राः' इति निषेधाऽभावात् टकारद्वयसहितस्यैव द्वित्वे हलादिशेषेण द्वितीयटकारस्य निवृत्तौ अटिट्टिषते इत्यनिष्टं प्रसज्येतेति भावः। तोपध इत्यन्य इति। ष्टुत्वेन टोपधनिर्देश इति भावः। अस्मिन्पक्षे सनि द्वित्वे कर्तव्ये ष्टुत्वस्याऽसिद्धत्वेऽपि 'नन्द्राः' इति निषेधाऽभावात्तकारविशिष्टस्य तटिस् इत्यस्य द्वित्वे हलादिशेषेण टकारस्य निवृत्त्या अतिट्टिषते इति रूपमिति भावः। आनट्टे इति। [illegible] 'नन्द्राः' इति निषेधो न, तत्र द्वितीयस्यैकाच इत्यनुवृत्तेः। घट्ट चलन इति। अयं चुरादावपि। स्फुट विकसन इति। अयं कुटादावपि। अठि गताविति। लिटि नुमि द्वित्वे हलादिशेषे 'अत आदेः' इति दीर्घे 'तस्मान्नुड्द्विहलः' इति नुडिति मत्वाह—आनण्ठ इति। वठि एकचर्यायामिति। असहायचर्यायामित्यर्थः। मडि चेति। विभाजन इत्यनुषज्यते। 'अठि

चडि कोपे। चण्डते। २७९ शडि रुजायां सङ्घाते च। शण्डते। २८० तडि ताडने। तण्डते। २८१ पडि गतौ। पण्डते। २८२ कडि मदे। कण्डते। २८३ खडि मन्थे। २८४ हेडृ २८५ होडृ अनादरे। जिहेडे। जुहोडे। २८६ वाडृ आप्लाव्ये। वशादिः। आप्लाव्यमाप्लवः। वाडते। २८७ द्राडृ २८८ ध्राडृ विशरणे। द्राडते। ध्राडते। २८९ शाडृ श्लाघायाम्। शाडते।

अथ गड्यन्ताः परस्मैपदिनः। २९० शौटृ गर्वे। शौटति। शुशौट। २९१ यौटृ बन्धे। यौटति। २९२ म्लेटृ २९३ म्रेडृ उन्मादे। द्वितीयो डान्तः। टान्तमध्ये पाठस्त्वर्थसाम्यान्नाथतिवत्। म्लेटति। म्रेडति। २९४ कटे वर्षावरणयोः। चटे इत्येके। चकाट। सिचि 'अतो हलादेर्लघोः' (सू २२८४) इति वृद्धौ प्राप्तायाम्। २२९९ ह्म्यन्तक्षणश्वसजागृणिश्व्येदिताम् ७।२।५॥ हमयान्तस्य क्षणादेर्ण्यन्तस्य श्वयतेरेदितश्च वृद्धिर्न स्यादिडादौ सिचि। अकटीत्। २९५ अट २९६ पट गतौ। आट। आटतुः। आटुः। पपाट। पेटतुः। पेटुः। २९७ रट परिभाषणे। रराट। २९८ लट बाल्ये। ललाट। २९९ शट रुजाविशरणगत्यवसादनेषु। शशाट। ३०० वट वेष्टने। ववाट। ववटतुः। ववटुः।

---

भूषायामिति परस्मैपदिषु वक्ष्यते। शाडृ श्लाघायामिति। डलयोरैक्यात् शालते इति काश्यपः। इत्यादयः षट्त्रिंशद्गताः।

अथ गड्यन्ता इति। 'गडि वदनैकदेशे' इत्यन्ता इत्यर्थः। म्लेटृ म्रेडृ इति। ऋदुपधौ। द्वितीयो डान्त इति। टवर्गतृतीयान्त इत्यर्थः। ननु डान्तस्यास्य कथं पाठः, शुद्धडान्तप्रकरण इत्यारभ्यानुक्रम्यमाणेष्वेवास्य पठितुं युक्तत्वादित्यत आह—टान्तमध्य इति। नाथतिवदिति। 'एधु वृद्धा'वित्यारभ्यानुक्रान्तेषु तवर्गचतुर्थान्तेषु यथा 'नाधृ नाथृ याच्ञे'ति तवर्गद्वितीयान्तस्यापि अर्थसाम्यात्पाठः, तद्वदित्यर्थः। कटे इति। कण्ठ्यादिः। चटे इति। तालव्यादिः। आद्यस्य लिटि अभ्यासस्य चुत्वमित्याह—चकाटेति। चकटतुः। द्वितीयस्य चेटतुः, वैरूप्यापादकादेशादित्वाऽभावादेत्वाभ्यासलोपौ। प्राप्तायामिति। हलन्तलक्षणाया नित्यवृद्धेर्नेटीति निषेधात् 'अतो हलादे'रिति वैकल्पिकवृद्धौ प्राप्तायामित्यर्थः। ह्म्यन्त। ह्म्यन्त क्षण श्वस जागृ णि श्वि एदित् एषां द्वन्द्वात् षष्ठी। ह् म् य् इत्येते वर्णा येषामन्ते ते ह्म्यन्ताः। तदाह—हमयान्तस्येति। क्षणादेरिति। आदिना श्वस जागृ इत्यनयोर्ग्रहणम्। ण्यन्तस्येति। प्रत्ययग्रहणपरिभाषया णिग्रहणेन तदन्तग्रहणमिति भावः। श्वयतेरिति। श्विधातोरित्यर्थः। एदित इति। एत् इत् यस्येति विग्रहः। वृद्धिर्न स्यादिति। 'सिचि वृद्धि'रित्यतो नेटीत्यतश्च तदनुवृत्तेरिति भावः। इडादौ सिचीति। 'सिचि वृद्धि'रित्यतः सिचीति 'नेटी'त्यत इटीति चानुवर्तत इति भावः। अकटीदिति। एदित्त्वान्न वृद्धिः। अट पटेति। 'अत आदे'रिति दीर्घं मत्वा

चकटिथ । ३०१ किट ३०२ खिट त्रासे । केटति । खेटति । ३०३ शिट ३०४ षिट अनादरे । शेटति । शिशेट । सेटति । सिषेट । ३०५ जट ३०६ झट संघाते । ३०७ भट भृतौ । ३०८ तट उच्छ्राये । ३०९ खट काङ्क्षायाम् । ३१० णट नृत्तौ । ३११ पिट शब्दसंघातयोः । ३१२ हट दीप्तौ । ३१३ षट अवयवे । ३१४ लुट विलोडने । डान्तोऽयमित्येके । ३१५ चिट परप्रैष्ये । ३१६ विट शब्दे । ३१७ बिट आक्रोशे । बयादि । हिट इत्येके ३१८ इट ३१९ किट ३२० कटी गतौ । एटति । केटति । कटति । ईकार 'श्वीदितो निष्ठायाम्' (सू ३०३९) इतीण्निषेधार्थः । केचित्तु इदितं मत्वा नुमि कृते कण्टतीत्यादि वदन्ति । अन्ये तु इ ई इति प्रश्लिष्य, अयति । इयाय । इयतुः । इयुः । इययिथ-इयेथ । इय । इयाय-इयय, दीर्घ

आह—आटेति । पेटतुरिति । एत्वाभ्यासलोपौ । वट वेष्टने । ववटतुरिति । 'न शसदद वादिगुणानामि'ति निषेधः । चकटिथेति । अत्र 'थलि च सेटी'ति प्राप्तस्य 'न शसदद' इति निषेध । किट खिट त्रास इति । यद्यपि 'इट किट कटी गताविति' अग्रे किट्धातुः पठ्यते । तथाप्यर्थभेदात् पुनरिह पाठः । खिट त्रासे, किट गतौ चेति पठितुं युक्तम् । शिट षिटे ति । आद्यस्तालव्यादिः । द्वितीयस्तु षोपदेशः । अत एवेति । आदेशे अवर्णव्यवाय कादेशादिरादेशाऽभ्यासलोपौ । द्वितीयस्य तु न । जेटतुः । जझटतुः । णट नृत्ताविति । णोपदेशः । नृतादेव नाटे पर्युदासादयं णोपदेश एव । प्रणटति । इट किट कटी गतावि ति । 'कटे वर्षावरणयो'रिति कटि पूर्वमेव पठितः । इह ईदित्पठ्यते । इदित्त्वाभावात् इत्यन्वेति वृद्धिनिषेधो न भवति । अकटीत्-अकाटीत् । ननु तर्हि कटेरेव कुतो न पठ्यत इत्यत आह—ईकार इति । केचित्त्विति । कटि इति इत्वा तत्पाठं मत्वा इदित्वा न्नुमि कृते अनुस्वारे परसवर्णे च कण्टतीति वदन्तीत्यर्थः । अन्ये त्विति । उदाहरन्ती त्यन्वयः । प्रश्लिष्येति । कटि इत्यनन्तरम् इ ई इति धातुद्वयं सवर्णदीर्घेण प्रश्लिष्य निर्दिष्टमिति भाव । अयतीति । इधातोर्लटि शपि गुणे अयादेशः । इयायेति । णलि द्वित्वे वृद्धौ आयादेशे 'अभ्यासस्याऽसवर्णे' इति इयङ् । इयतुरिति । इकारोऽत्र ह्रस्व । तथा हि—इ अतुसिति स्थिते कित्त्वाद्गुणाभावे 'द्विर्वचनेऽची'ति निषेधाद्यणभावे 'इ' इत्यस्य द्वित्वे इ इ अतुसिति स्थिते सवर्णपरकत्वादभ्यासस्य इयङभावे सति 'वार्णादाङ्गं बलीय' इति सवर्णदीर्घं बाधित्वा 'एरनेकाच' इत्युत्तरखण्डस्य यणि 'इयतु'रिति रूपम् । इधातोर्भारद्वाजनियमात्थलि वेट् । तत्र इट्पक्षे रूपमाह—इययिथेति । थलि द्वित्वे इटि पित्त्वेन कित्त्वाऽभावात् गुणे अयादेशे अभ्यासस्य इयङ् । नचात्र परनिमित्तिकगुणस्य स्थानिवत्त्वेन असवर्णपरत्वाऽभावात् कथमभ्यासस्य इयङिति वाच्यम्, असवर्णग्रहणसामर्थ्यादेव स्थानिवत्त्वाप्रसक्तेः । एवं णलि इयायेत्यत्रापि बोध्यं स्थानिवत्त्वम् । थलि इडभावपक्षे रूपमाह—इयेथेति । थलि द्वित्वे गुणे अभ्यासस्येयङ् । अतुसि इयथुः । इयेति । थस्य अकारादेशे द्वित्वे उत्तरखण्डस्य 'एरनेकाच' इति यणि

स्य इ 'इजादेश--' (सू२२३७) इत्याम्। अयाञ्चकारेत्यादि उदाहरन्ति। ३२१ मडि भूषायाम्। ३२२ कुडि वैकल्ये। कुण्डति। कुण्डत इति तु दाहे गतम्। ३२३ मुड ३२४ प्रुड मर्दने। ३२५ चुडि अल्पीभावे। ३२६ मुडि खण्डने। मुण्डति। पुडि च इत्येके। पुण्डति। ३२७ रुटि ३२८ लुटि स्तेये। रुण्टति। लुण्टति। रुठि लुठि इत्येके। रुडि लुडि इत्यपरे। ३२९ स्फुटिर् विशरणे। इरित्वादङ् वा। अस्फुटत्-अस्फोटीत्। स्फुटि इत्यपि केचित्। इदित्वान्नुम्। स्फुण्टति। ३३० पठ व्यक्तायां वाचि। पेठतुः। पेठिथ। अपठीत्। अपाठीत्। ३३१ वठ स्थौल्ये। ववठतुः। ववठिथ। ३३२ मठ मदनिवासयोः। ३३३ कठ कृच्छ्रजीवने। ३३४ रट परिभाषणे। लट इत्येके। ३३५ हठ प्लुतिशठत्वयोः। बलात्कारे इत्येके। हठति। जहाठ। ३३६ रुठ ३३७ लुठ ३३८ उठ उपघाते। ओठति। ऊठ इत्येके। ऊठति। ऊठाञ्चकार। ३३९ पिठ हिंसासंक्लेशनयोः। ३४० शठ कैतवे च। ३४१ शुठ प्रतिघाते। शोठति। शुठि इति स्वामी। शुण्ठति। ३४२ कुठि च। कुण्ठति। ३४३ लुठि आलस्ये प्रतिघाते च। ३४४ शुठि शोषणे। ३४५ रुठि ३४६ लुठि गतौ। ३४७ चुड्ड भावकरणे। भावकरणमभिप्रायसूचनम्। चुड्डति। चुचुड्ड। ३४८ अड्ड अभियोगे। अड्डति। आनड्ड। ३४९ कड्ड कार्कश्ये। कड्डति। चुड्डादयस्त्रयो दोपधाः। तेन क्विपि चुत् अत् कत् इत्यादि। ३५० क्रीडृ विहारे

रूपम्)। 'असंयुक्तमो वेति' कित्त्वपक्षे आह—इयायेति। द्वित्वे कित्त्वेन कित्त्वाऽभावात् गुणे आयादेशो अभ्यासस्य इयङ्। कित्त्वाऽभावे आह-इययेति। द्वित्वे कित्त्वेन कित्त्वाऽभावात् गुणे अयादेशो अभ्यासस्य इयङ्। वसि मसि च क्रादिनियमात् सिद्धमिति द्वित्वे इस्तरस्वरस्य 'एरनेकाच' इति यणि इयिव इयिमेति रूपम्। एता। एष्यति। अयतु। आयत्। अयेत्। आशीर्लिङि तु 'अकृत्सार्वधातुकयोः' इति दीर्घे ईयात्। सिचि वृद्धिः। ऐषीत्। ऐष्यत्। दीर्घस्य लिटि। दीर्घस्य ईधातोरित्यर्थः। तस्य लिटं वर्जयित्वा रूपादिषु पूर्ववत्। लिटि विशेषमाह—अयाञ्चकारेति। ईधातोरपि गुणे अयादेशः अनुप्रयोगश्च। कुडि वैकल्य इति। वैकल्यम् अविवेक इत्याहुः। अपूर्णभावो वा। मुड प्रुड मर्दन इत्यादि। स्पष्टम्। पठधातोर्लिटि अतुसादौ किति एत्वाभ्यासलोपौ। तदाह—पेठतुरिति। पेठिथेति। कित्त्वेन अकित्त्वेऽपि 'थलि च सेटी'त्येत्वाभ्यासलोपौ। अपठीत्। अपाठीदिति। 'अतो हलादेर्लघोः' इति वृद्धिविकल्पः। वठ स्थौल्ये इति। स्थौल्यं स्थूलीभवनम्। 'न शसददवादिगुणानाम्' इत्येत्वाभ्यासलोपनिषेध इति मत्वा आह—ववठतुः। ववठिथेति। दोपधा इति। स्फुटत्वेन डोपधनिर्देश इति भावः। चुदिति। चुड्ड धातोः क्विपि इलदयादिना सुलोपे द्वितीयस्य डस्य संयोगान्तलोपे ष्टुत्वनिवृत्तौ 'वावसाने' इति चार्त्वे चुत् इति रूपम्। अदिति। अड्डधातोः क्विपि पूर्ववत् रूपम्। कदिति।

तिष्टेपिरे । तेपृ कम्पने च । ३६६ ग्लेपृ दैन्ये । ग्लेपते । ३६७ टु वेपृ कम्पने । वेपते । ३६८ केपृ ३६९ गेपृ ३७० ग्लेपृ च । चात्कम्पने गतौ च । सूत्रविभागादिति स्वामी । मैत्रेयस्तु चकारमन्तरेण पठित्वा कम्पने इत्यपेक्षत इत्याह । ग्लेपेरर्थभेदा-पुनः पाठः । ३७१ मेपृ ३७२ रेपृ ३७३ लेपृ गतौ । ३७४ त्रपूष् लज्जायाम् । त्रपते । २३०१ तृफलभजत्रपश्च ६।४।१२२॥ एषामत एकारोऽभ्यासलोपश्च स्या-त्किति लिटि सेटि थलि च । त्रेपे । त्रेपाते । त्रेपिरे । ऊदित्वादिड्वा । त्रपि-ता । त्रप्ता । त्रपिषीष्ट । त्रप्सीष्ट । ३७५ कपि चलने । कम्पते । चकम्पे । ३७६ रबि ३७७ लबि ३७८ अबि शब्दे । ररम्बे । ललम्बे । आनम्बे । ३७९ लबि अवस्रंसने च । ३८० कबृ वर्णे । चकबे । ३८१ क्लीबृ अधार्ष्ट्ये । चिक्लीबे । ३८२ क्षीबृ मदे । क्षीबते । ३८३ शीभृ कत्थने । शीभते । ३८४ चीभृ च । ३८५ रेभृ शब्दे । रिरेभे । अभिरभी क्वचित्पठ्येते । अम्भते । रम्भते । ३८६ ष्टभि ३८७ स्कभि प्रतिबन्धे । स्तम्भते । तुम्यनुस्वारः । उत्तम्भते । 'उदः स्थास्त-म्भोः'-(सू ११८) इति पूर्वसवर्णः । विष्टम्भते । 'स्तम्भेः' (सू २२७२) इति षत्व

---

ष्टुत्वनिवृत्त्या लटि रूपं सिद्धवत्कृत्य लिटि रूपमाह—तिष्टिप इति । 'शर्पू-र्वाः खयः' इति सकारः शिष्यते, षकारस्य निवृत्तौ ष्टुत्वनिवृत्तेः । कित्त्वान्न गुणः । तिष्टेप इति । ष्टेपृधातोः रूपम् । तेपृ कम्पने चेति । चात्क्षरणे । वस्तुतस्तु चकारेण क्षर-णार्थस्य लाभात् पूर्वधातोः पाठस्त्यक्तुं शक्यः । केचित्तु 'देपृ' इति वर्गतृतीयादिं प-ठन्ति । चात्कम्पने गतौ चेति । अनुक्तसमुच्चयार्थश्चकार इति भावः । एतच्च टु वेपृ केपृ गेपृ ग्लेपृ कम्पन इत्येव सिद्धे पृथक्पाठाल्लभ्यते । अर्थभेदादिति । ग्लेपृ दैन्ये इति पूर्वं पठितम् । इह तु अर्थभेदात् पुनः पाठः । अन्यथा 'ग्लेपृ दैन्ये कम्पने गतौ च' इति गौरवं स्यादिति भावः । त्रपूषिति । ऊकारः षकारश्च इत् । अनु-पधः । संयुक्तहल्मध्यस्थत्वादेत्त्वाभ्यासलोपयोरप्राप्तावाह—तृफल । 'अत एक-हल्मध्ये' इत्यतः अत इति लिटीति चानुवर्तते । 'थलि च सेटि' इति अभ्या-सलोपश्चेति च, 'गमहनेत्यस्मात् क्ङितीति, 'थलि च सेटी'ति सूत्रं च । त-दाह—एषामिति । गुणशब्देन भाविताऽकारवत्त्वादिरूपादेशादित्यादेकहल्मध्य-स्थत्वाऽभावात्प्राप्ते विधिरयम् । आनम्ब इति । द्विहल्त्वान्नुट् । ष्टभि स्कभीति । आद्यः षोपदेशः, ष्टुत्वेन तकारस्य टकारनिर्देशेन दन्त्यपरकसादि-त्वात् , ततः परस्य सत्वे ष्टुत्वस्य निवृत्ति । तदाह—स्तम्भत इति । तुम्यनुस्वार इति । इदित्वान्नुमि 'नश्चापदान्तस्ये'ति तस्यानुस्वारः । 'अनुस्वारस्य ययी'ति तस्य पर-सवर्णः मकारः । 'स्तम्भे' इत्येव पाठे तु प्रतिपदोक्तत्वात् 'उदः स्था' इत्यत्र सस्यैव ग्रहणं स्यादिति भावः । पूर्वसवर्ण इति । सकारस्य थकारः । तस्य 'खरि चे'ति चर्त्वे

त्रु न भवति । स्तुविधौ निर्दिष्टस्य सौत्रस्यैव तत्र ग्रहणात् । तद्बीजं तु 'उदः स्था-स्तम्भोः-' ( सू ११८ ) इति पवर्गीयोपधपाठः, 'स्तम्भेः' ( सू २२७२ ) इति तवर्गीयोपधपाठश्चेति माधवः । केचिदस्य टकार औपदेशिक इत्याहुः । स्तम्भते विष्टम्भते । ष्टम्भते । टष्टम्भे । ३८८ जभी ३८९ जृभि गात्रविनामे । २३०२ रधिजभोरचि ७।१।६१॥ एतयोर्नुमागमः स्यादचि । जम्भते । जजम्भे । जम्भिता । अजम्भिष्ट । जृम्भते । जजृम्भे । ३९० शल्भ कत्थने । शशल्भे । ३९१ वल्भ भोजने । दन्त्योष्ठ्यादिः । ववल्भे । ३९२ गल्भ धार्ष्ट्ये । गल्भते । ३९३ श्रम्भु प्रमादे । तालव्यादिर्दन्त्यादिश्च । श्रम्भते । स्रम्भते वा । ३९४ ष्टुभु स्तम्भे । स्तोभते । विष्टोभते । तुष्टुभे । अष्टोभिष्ट ।

अथ परस्मैपदिनः । ३९५ गुपू रक्षणे । २३०३ गुपूधूपविच्छिपणिप

तकार इत्यर्थः । अत एवाभ्यां तत् "उदः स्थास्तम्भोः" इत्यत्र इत्सन्धौ प्रदर्शितम् । विष्टम्भत इति । 'सात्पदाद्योः' इति षत्वनिषेध इति भावः । अन्येषामपि 'स्तम्भेः' इति षत्वं कुतो न स्यादित्यत आह—स्तम्भेरिति षत्वं न भवतीति । कुत इत्यत आह—स्तुविधाविति । 'स्तम्भुस्तुम्भुस्कम्भुस्कुम्भुस्कुञ्भ्यः श्नुश्चेति' सूत्रे निर्दिष्टस्यैव प्रति-पदोक्तस्य षत्वविधौ ग्रहणादित्यर्थः । नन्वेवं सति 'उदःस्थास्तम्भोः' इति पूर्वसवर्णवि-धावपि सौत्रस्यैव ग्रहणं स्यादित्यत आह—तद्बीजमिति । षत्वविधौ सौत्रस्यैव ग्रहणम्, पूर्वसवर्णविधौ तु तदन्यस्यापीत्यत्र प्रमाणमित्यर्थः । ननु पूर्वसवर्णविधौ सौत्रस्य, षत्वविधौ तु सोपधस्य पाठ इत्यत्र किं प्रमाणमित्यत आह—इति माधव इति । पा-णिनिशिष्यपरम्परैव तत्र प्रमाणमिति भावः । क्विपि 'शर्पूर्वाः खयः' इति षकारस्य निवृत्तौ ष्टुत्वनिवृत्त्या तकारः शिष्यते । तस्तम्भे । टकार औपदेशिक इति । स्वाभाविक एव टकारो न तु ष्टुत्वसम्पन्न इत्यर्थः । ष्टम्भते विष्टम्भत इति । तथा च षकारस्यापि स्वा-भाविकत्वात् षत्वविधौ स्तम्भेरेव ग्रहणेऽपि षकारो निर्बाध इति भावः । टष्टम्भ इति । 'शर्पूर्वाः' इति टकार एव शिष्यत इति भावः । जभी जृभि गात्रविनाम इति । गात्रस्य विनामः वक्रभावः । आद्य ईदित् । द्वितीय इदित् । आद्यस्य ईदित्वं 'श्वीदितो नि-ष्ठायाम्' इति इण्निषेधार्थम् । रधिजभोः । 'रध हिंसायाम्' इति श्यन्विकरणस्य चतुर्था-न्तस्य इका निर्देशः । 'इदितो नुम् धातोः' इत्यतः नुमित्यनुवर्तते । तदाह—एतयोरिति । अनिदित्त्वात् नुम्विधिः । जम्भत इति । शपि नुम् । 'अभिमतेभ्यथादाविटि' अपरक-त्वान्नुम् । अचि किम् । रब्धा । जब्धम् । श्रम्भु इति । अकारमध्यः । ष्टुभु स्तम्भ इति । ष्टुत्वेन तकारस्य टः । षोपदेशोऽयम् । विष्टोभत इति । 'उपसर्गात्सुनोति' इति षत्वम् । अष्टोभिष्टेति । 'प्राक्सितादड्व्यवायेऽपी'ति षत्वम् । लिट् इत्यादयस्तोभत्यन्ता अनुदा-त्तो गताः ।

गुपू रक्षण इति । ऊदित्त्वम् । गुपूधूप । पण इति । गुपू धूप विच्छि पणि पनि

निभ्य आयः ३।१।२८॥ एभ्य आयप्रत्ययः स्यात् स्वार्थे। 'पुगन्त'-(सू० २१८९) इति गुणः। २३०४ सनाद्यन्ता धातवः ३।१।३२॥ सनादयः कमेर्णिङन्ताः प्रत्यया अन्ते येषां ते धातुसंज्ञाः स्युः धातुत्वाल्लडादयः। गोपायति। २३०५ आयादय आर्धधातुके वा ३।१।३१॥ आर्धधातुकविवक्षायामायादयो वा स्युः। २३०६ कास्प्रत्ययादाममन्त्रे लिटि ३।१।३५॥ कास्धातोः प्रत्ययान्तेभ्यश्चाऽऽम्स्याल्लिटि न तु मन्त्रे। 'कास्यनेकाज्ग्रहणं कर्तव्यम्'। सूत्रे प्रत्ययग्रहणमपनीय तत्स्थानेऽनेकाच इति वाच्यमित्यर्थः। २३०७ आर्धधातुके ६।४।४६॥ इत्यधि-

कृत्येभ्य इत्यर्थः। अर्थनिर्देशाऽभावादाह—स्वार्थे इति। आयप्रत्ययः अकारान्तः। तदुक्तं तु 'गोपायतं नः सुमनस्यमाना' इत्यत्र गोपायेत्यस्य धातुस्वरेणान्तोदात्तत्वेन तदकारेण एकादेशस्यापि 'एकादेश उदात्तेनोदात्तः' इत्युदात्तत्वे, तमित्यस्य अनुपदेशात् परत्वसार्वधातुकत्वेन अनुदात्तस्य 'उदात्तादनुदात्तस्य स्वरितः' इति स्वरितत्वमिति बोध्यम्। 'धातोरेकाचः' इत्यतो 'धातोः' इत्यनुवृत्त्या धातोरिति विहितत्वादायप्रत्ययस्यार्धधातुकत्वात् तत्कार्यं गुणादि भवति। तदाह-पुगन्तेति गुण इति। गुप्धातोरायप्रत्ययान्तस्य भ्वादिषु पाठाऽभावेन धातुत्वाऽभावात् कथमस्माल्लडादय इत्यत आह-सनाद्यन्ताः। 'गुप्तिज्किद्भ्यः सन्' इत्यारभ्य 'कमेर्णिङ्' इत्यन्तैः सूत्रैः सनादिप्रत्ययाभिधानात् सूत्रमिदं पठितम्। सन् आदिर्येषां ते सनादयः णिङ्प्रत्ययपर्यन्ताः, ते अन्ते येषां ते सनाद्यन्ता इति विग्रहः। तदाह—सनादयः कमेर्णिङन्ता इति। 'सन्क्यच्काम्यच्क्यष्क्यङोऽथाचारक्विब्णिज्यङौ तथा। यगाय ईयङ् णिङ् चेति द्वादशामी सनादयः॥' इति संग्रहः। संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणप्रतिषेधादिह तदन्तग्रहणम्। धातुत्वादिति। आयप्रत्ययान्तस्येत्यर्थः। गोपायतीति। शपि 'अतो गुणे' इति पररूपम्। आयादयः। आयः आदिः येषां ते आयादयः। 'आय ईयङ् णिङ् चेति त्रय आयादयो मताः।' 'गुपूधूपविच्छिपणिपनिभ्य आयः' 'ऋतेरीयङ्' 'कमेर्णिङ्' इत्युत्तरमस्य सूत्रस्य पाठात्। विवक्षायामिति। 'आर्धधातुके' इति विषयसप्तमीति भावः। परसप्तमीत्वे तु गोपायितेत्यत्र अतो लोपो न स्यात्, आर्धधातुकोपदेशकाले अदन्तत्वाभावादिति भावः। तथा च लिटि आयप्रत्ययस्य विकल्पः स्थितः। तत्र आयप्रत्ययपक्षे आह—कास्प्रत्ययात्। आम् अमन्त्रे इति च्छेदः। चकाशृ दीप्तौ, जागृ निद्राक्षये, इत्यादिभ्योऽपि लिटि आमिष्यते। तदर्थमाह—कास्यनेकाजिति। ननु यस्मिन् वार्तिके सूत्रस्थं प्रत्ययग्रहणमपि लभ्यते तदा कास्धातोश्च अनेकाचश्च प्रत्ययान्ताच्चेति लभ्यते। ततश्च स इवाचरति अति क्विबन्तात्लडादयः। लिटि सौ अतुरित्यादीनि न सिध्येत्, प्रत्ययान्तत्वेन आमः प्रसङ्गात्। यदि तु कास्धातोश्च अनेकाचः प्रत्ययान्ताच्चेति व्याख्यायेत, तदा चकाशृजागृआदिभ्यो न स्यादित्यत आह-प्रत्ययग्रहणमपनीयेति। तथा च कास्धातोरनेकाचश्च आमित्येतावदेव लभ्यत इति नोक्तदोषद्वयमिति भावः। वस्तुतस्तु स इवाचरति अतीत्यादि नास्त्येवेति

कृत्य । २३०८ अतो लोपः ६।४।४८ आर्धधातुकोपदेशकाले यदकारान्तं तस्याकारस्य लोपः स्यादार्धधातुके परे । गोपायाञ्चकार-गोपायाम्बभूव-गोपायामास । जुगोप । जुगुपतुः । ऊदित्त्वाद्वेट् । जुगोपिथ-जुगोप्थ । गोपायिता-गोपिता-गोप्ता । गोपाय्यात्-गुप्यात् । अगोपायीत्-अगोपीद्-अगौप्सीद् । ३९६ धूप सन्तापे । धूपायति । धूपायाञ्चकार-दुधूप । धूपायिताऽसि । धूपिताऽसि । ३९७ जप ३९८ जल्प व्यक्तायां वाचि । जप मानसे च । ३९९ चप सान्त्वने । ४०० षप समवाये । समवायः सम्बन्धः सम्यगवबोधो वा । सपति । ४०१ रप

---

गुपधातुनिरूपणे वक्ष्यते । तथा च गोपाय आमिति स्थितम् । अतो लोपः । 'अनुदात्तोपदेशवनतितनोत्यादीना'मित्यतः उपदेशग्रहणमनुवर्तते । आर्धधातुक इत्यधिकृतम् । तदिह आवर्तते । एकमुपदेशे अन्वेति । द्वितीयं तु लोपे परनिमित्तम् । तदाह—आर्धधातुकोपदेश इत्यादिना । आर्धधातुकोपदेश इति किम् । भव भय गतौ, आभ्यां क्विपि, 'लोपो व्योर्वली'ति लोपे 'ह्रस्वस्य पिति कृति' तुकि, अपृक्तलोपे भव् भय् इतीष्यते । अत्र यलोपे सति अतो लोपो न भवति, आर्धधातुकोपदेशकाले धातोरकारान्तत्वात् । 'आर्धधातुकोपदेश' इत्यत्र आर्धधातुकग्रहणाभावे 'चिकीर्षित'मित्यत्र अल्लोपो न स्यात्, सन उपदेशकाले नकारान्तत्वात् । आर्धधातुकग्रहणे तु न दोषः, अनुबन्धविनिर्मुक्तात् सन्प्रत्ययादेव क्तप्रत्ययस्य आर्धधातुकस्योत्पत्तेः । आर्धधातुके पर इति किम् ? कथयति । चुरादावदन्तोऽयम् । अत्र उपधावृद्धिर्न भवति, 'अचः परस्मि'न्नित्यल्लोपस्य स्थानिवत्त्वात् । आर्धधातुके पर इत्यनुक्तौ तु अल्लोपस्य परनिमित्तकत्वाऽभावात् स्थानिवत्त्वं न स्यात् । तथा च प्रकृते गोपाय आमिति स्थिते अतो लोपे गोपायामिति सिध्यति । यद्यपि सवर्णदीर्घेणाप्येतत्सिद्धम्, तथापि न्याय्यत्वादतो लोप उपन्यस्तः । आयप्रत्ययाऽभावपक्षे आह—जुगोपेति । पित्त्वेन कित्त्वाऽभावाल्लघूपधगुणः । जुगुपतुरिति । कित्त्वान्न गुणः । ऊदित्त्वाद्वेति । 'स्वरत्यादि'ति वेटः । जुगुपिव-जुगुप्व । जुगुपिम-जुगुप्म । क्रादिनियमस्तु अप्राप्तस्येडभावस्य, नतु विभाषाप्राप्तस्येति दिधू धातौ इत्युक्तम् । गोपायितेत्यादि । लुटि आयप्रत्ययपक्षे नित्यमिट् । आयप्रत्ययाभावपक्षे इड्विकल्पः । ऊदित्त्वस्य केवले चरितार्थत्वात् । तदाह—गोपिता—गोप्तेति । गोपायिष्यति । गोपिष्यति । गोप्स्यति । गोपायतु । अगोपायत् । गोपायेत् । आशीर्लिङि आयप्रत्ययपक्षे अतो लोपे रूपमाह—गोपाय्यादिति । आयप्रत्ययाऽभावे आह—गुप्यादिति । लुङि सिचि आयप्रत्ययपक्षे आह—अगोपायीदिति । आयप्रत्ययाऽभावपक्षे इटि रूपमाह—अगोपीदिति । 'इट ईटी'ति सिज्लोपः 'नेटी'ति हलन्तलक्षणवृद्धिनिषेधः । इडभावे तु इटः परत्वाऽभावात् न सिज्लोप इत्याह—अगौप्सीदिति । 'वदव्रजे'ति वृद्धिः । अगोपायिष्यत् अगोपिष्यत् अगोप्स्यत् । धूप सन्तापे इति । 'गुपूधूप' इत्यायः । आर्धधातुके तद्विकल्पः । षप सम-

४०२ लप व्यक्तायां वाचि । ४०३ चुप मन्दायां गतौ । चोपति । चुचोप । चोपिता । ४०४ तुप ४०५ तुम्प ४०६ त्रुप ४०७ त्रुम्प ४०८ तुफ ४०९ तुम्फ ४१० त्रुफ ४११ त्रुम्फ हिंसार्थाः । तोपति । तुतोप । तुम्पति । तुतुम्प । तुतुम्पतुः । संयोगात्परस्य लिटः कित्त्वाभावान्नलोपो न । 'किदाशिषि' (सू २२१६) इति कित्त्वान्नलोपः । तुप्यात् । 'आस्तुम्पतौ गवि कर्तरि' इति पारस्करादिगणे पाठात्सुट् । प्रस्तुम्पति गौः । श्तिपा निर्देशाद्यङ्लुकि न । प्रतोतुम्पीति । त्रोपति । त्रुम्पति । तोफति । तुम्फति । त्रोफति । त्रुम्फति । इहाद्यौ द्वौ पञ्चमषष्ठौ च नीरेफाः । अन्ये सरेफाः । आद्याश्चत्वारः प्रथमान्ताः । ततो द्वितीयान्ताः । अष्टावप्युकारवन्तः । ४१२ पर्प ४१३ रफ ४१४ रफि ४१५ अर्ब ४१६ पर्ब ४१७ लर्ब ४१८ बर्ब ४१९ मर्ब ४२० कर्ब ४२१ खर्ब ४२२ गर्ब ४२३ शर्ब ४२४ षर्ब ४२५ चर्ब गतौ । आद्यः प्रथमान्तः ततो द्वौ द्वितीयान्तौ । तत एकादश तृतीयान्ताः । द्वितीयतृतीयौ मुक्त्वा सर्वे रेफोपधाः । पर्पति । पपर्प । रफति । रम्फति । अर्बति । आनर्ब । पर्बति । लर्बति । बर्बति । पवर्गीयादिरयम् । मर्बति । कर्बति । खर्बति । गर्बति । शर्बति । सर्बति । चर्बति । ४२६ कुबि आच्छादने । कुम्बति । ४२७ लुबि ४२८ तुबि अर्दने । लुम्बति । तुम्बति । ४२९ चुबि वक्त्रसंयोगे । चुम्बति । ४३० षृभु ४३१ षृम्भु हिंसार्थौ । सर्भति । ससर्भ । सर्भिता । सृम्भति । ससृम्भ । सृभ्यात् । षिभु षिम्भु इत्येके । सेभति । सिम्भति । ४३२ शुभ ४३३ शुम्भ भाषणे । भासने इत्येके । हिंसायाम् इत्यन्ये ।

अथानुनासिकान्ताः । तत्र कम्यन्ता अनुदात्तेतो दश । ४३४ घिणि ४३५ घुणि ४३६ घृणि ग्रहणे । नुम् । *णत्वम् । घिण्णते । जिघिण्णे । घुण्णते । जुघुण्णे । घृण्णते । जघृण्णे । ४३७ घुण ४३८ घूर्ण भ्रमणे । घोणते । घूर्णते । इमौ तुदादौ

चप इति । चोपदेशोऽयम् । चुप मन्दायामिति । चवर्गप्रथमादिरयम् । चवर्गद्वितीयादिस्त्वनिष्टः । तुप तुम्पेति । अष्टावप्युदुपधाः तृतीयचतुर्थौ सप्तमाष्टमौ च रेफवन्त इति मूले स्पष्टीभविष्यति । तुतुम्पतुरित्यत्र नलोपमाशङ्क्याह—संयोगादिति ॥ आशीर्लिङि विशेषमाह—किदाशिषीति । आस्तुम्पताविति । श्तिपा निर्देशोऽयम् । आङ् तुम्पतौ परे सुट् स्यात् गवि कर्तरि सतीत्यर्थः । तुम्पतोः सुट् आद्यवयवः । सुड्विधावस्मिन् तुम्पताविति श्तिपा निर्देशस्य प्रयोजनमाह—श्तिपा निर्देशाद्यङ्लुकि नेति । 'शपाऽनुबन्धेन' इत्युक्तेरिति भावः । षृभु षृम्भु इति । ऋदुपधौ षोपदेशौ । सृभ्यादिति । आशीर्लिङि अनिदित्त्वान्नलोपः । षिभु षिम्भु इत्येक इति । आद्य इदुपधो द्वितीयो मोपधः । शुभ शुम्भेति । द्वितीयस्य आशीर्लिङि अनिदित्त्वान्नलोपः । इति 'गुपू' इत्यादयः पवर्गीयान्ताः परस्मैपदिनो गताः ।

कम्यन्ता इति । 'कमु कान्तौ' इत्येतत्पर्यन्ता इत्यर्थः । घुण घूर्णेति । द्विती-

